स्तीर्य्य तिलजलगन्धयुतं पुटकं वामहस्ते कृत्वा कुशादिकमादाय अद्यामुकगोत्रामुकप्रेतोनमासिकपिण्डश्राद्धे स्थाने इदमवनेजनं ते मया दीयते तवोपतिष्ठताम् । कुशादिकसहितपिण्डमादाय अद्यामुकगोत्रा-मुकप्रेतोनमासिकश्राद्धे एष पिण्डस्ते मया दीयते तवोपतिष्ठतामित्यवने-जनस्थाने पिण्डं दद्यात् ।। ततो दर्भमूलेन करं प्रोक्ष्य ।। सव्यं कृत्वाऽऽचम्याऽपसव्यं कृत्वा ।।६९।।

मन्त्रपाठं विना तूष्णीं भास्करमूर्तिं प्रेतं ध्यायेत् ।। ततोऽवनेजनपात्रं वामहस्ते कृत्वा कुशादिकं गृहीत्वा।। अद्यामुकगोत्रामुकप्रेतोन-

अनि अर्को संकल्पमा पिण्ड उठाउनु र अद्य० देखि तवोपतिष्ठताम् सम्म पढी आसनमाथि पिण्ड राखिदिनु । अनि कुशले हात पुछ्नु । सव्य भएर आचमन गर्नू ।।६९।।

अनि अपसव्य भएर मन्त्र पाठ नगरी फूल अक्षता ले प्रेतको ध्यान सूर्य रूपमा गरेर पिण्डमा चढाउनू । अनि अवनेजन गरेर संकल्प पढ्नू । अनि कम्मरमा छोड्दिनू। सव्य

मासिकश्राद्धपिण्डे इदं प्रत्यवनेजनं ते मया दीयते तवोपतिष्ठतामिति प्रत्यवनेजनं पिण्डोपरि दद्यात् ।। ततो नीवीं विस्रंस्य। सव्यं कृत्वाऽऽ-चम्याऽपसव्यं कृत्वा वामेन पाणिना धृतं सूत्रं दक्षिणेनादाय उभाभ्यां पिण्डोपरि प्रेतैतत्ते वास इति सूत्रं धृत्वा ।। गन्धादिभिः पिण्डं समभ्यर्च्य कुशादिकमादाय ।। अद्यामुकगोत्रामुकप्रेतोनमासिकश्राद्धपिण्डे एतानि सूत्रगन्धपुष्पाक्षतधूपदीपनैवेद्यानि ते मया दीयन्ते तवोपतिष्ठन्तामित्यु-त्सृजेत्।। ततः पिण्डशेषान्नं पिण्डसमीपे विकीर्य ।। शिवा आपः सन्तु इति जलं । सौमनस्यमस्तु इति पुष्पं । अक्षतञ्चारिष्टमस्त्विति तण्डुलान्।

भएर आचमन गर्नु र अपसव्य भएर पिण्डमा सूत्र (काँचो धागो) चढाउनू । अनि पिण्डको पूजा गरेर संकल्प मा अद्य० देखि तवोपतिष्ठन्ताम् सम्म पढिदिनू । अनि पिण्डशेष पिण्डको नगीचै राखिदिनू । अनि बाहुनमा शिवा आपः सन्तु - भनेर जल। सौमनस्यमस्तु भनेर फूल । अक्षतंचारिष्टमस्तु भनेर अक्षता चढाउनू ।।७०।।

अन्नपात्रोपरि क्षिपेत् ।।७०।।

कुशादिकमादाय ।। अद्यामुकगोत्रस्यामुकप्रेतस्योनमासिकश्राद्धे दत्तैतदन्नपानादिकमुपतिष्ठतामित्यक्षय्योदकं दत्वा सव्यं कृत्वा ।। अघोरः प्रेतोऽस्तु इति दक्षिणां दिशं पश्यन्पिण्डोपरि पूर्वाग्रां जलधारां दद्यात्।। अत्राशीः प्रार्थनं भवति।। ततः पिण्डोपरि सपवित्रान् कुशान्धृत्वा ।। पुटकस्थजलादिना मन्त्रपाठं विना । इदमूर्ज्जं ते मया दीयते तवोपतिष्ठतामिति सपवित्रकुशोपरि दक्षिणाग्रां जलधारां दद्यात् ।। ततः पिण्डमाघ्रायोत्थापयेत् । पिण्डाधारकुशान् वह्नौ क्षिपेत् ।। अर्घपात्रं संचाल्य ।। सव्यं कृत्वा कुशादिकमादाय अद्यामुकगोत्रस्यामुकप्रेतस्य

अनि कुश लिएर संकल्प गरेर अक्षय्योदक दिनू । अनि अघोरा पढेर पिण्डमा जल धारा दिनू । यहाँ आशिष प्रार्थना निषेध छ । अनि इदमूर्जन्ते० पढेर दूध दक्षिणतिर धारा पारेर पिण्डमा चढाउनू । अनि वास्ना लिई पिण्ड उठाउनू र वेदीमा विछाएको कुश

कृतैतदूनमासिकश्राद्धप्रतिष्ठार्थमिदं रजतं चन्द्रदैवतं यथानामगोत्राय ब्राह्मणाय दक्षिणां दातुमहमुत्सृजे इति दक्षिणां दद्यात् ।। ततो देवताभ्यः इति वारत्रयं पठेत् ।। ततोऽपसव्यं कृत्वा दीपमाच्छाद्य हस्तौ पादौ प्रक्षाल्य सव्येनाऽऽचम्य प्रमादादित्यादि पठित्वा विष्णुं स्मृत्वा श्राद्धीय-वस्तूनि ब्राह्मणाय प्रतिपादयेत् ।।७१।।

एवमेव द्वितीयमासिक, त्रैपाक्षिक, तृतीयमासिक, चतुर्थमासिक, पंचममासिक, षष्ठमासिक, उनषाण्मासिक, सप्तममासिक, अष्टममा-सिक, नवममासिक, दशममासिक, एकादशमासिक, द्वादशमासिक,

---

आगोमा हालिदिनू । अनि संकल्प मूल अनुसार पढेर दक्षिणा दिनू । अनि देवताभ्यः० तीन पल्ट पढ्नू । अनि अपसव्य भएर बत्ती ढाकिदिनू । सव्य भएर आचमन गरी प्रामादात् पढ्दै विष्णुको स्मरण गर्नु । श्राद्ध सामग्री ब्राह्मणलाई दिनू।।७१।।

अब द्वितीय मासिक, त्रैपाक्षिक तृतीय, चतुर्थ, पंचम, षष्ठ, उनाषाड्, सप्तम,

उनाब्दिकश्राद्धेषु तत्तत्पदप्रक्षेपेण प्रयोग ऊह्यः।।

यदि मरणदिनादारभ्य द्वादशमासमध्ये अधिकमासपातस्तदा तन्मासिकं द्विवारं कार्य्यम् ।। आद्यमासिकातिरिक्तानि उनमासिकादीनि कालैक्यात्कर्तैक्याद्दैवतैक्याच्च तन्त्रेणापि भवन्तीति सोऽपि प्रयोगो लिख्यते।।

तत्रः क्रमः।। श्राद्धदेशं श्राद्धीयवस्तून्यासाद्य दीपं प्रज्वाल्य कर्ता पूर्वाभिमुख उपविश्य कुशमूलेन अपवित्रः पवित्रोवेत्यादि पठित्वा पुण्डरीकाक्षः पुनात्विति श्राद्धदेशं द्रव्याण्यात्मानं च सिञ्चेत् ।। तत्कुशादिकमादाय अद्यामुकगोत्रस्यामुकप्रेतस्य प्रेतत्वविमुक्त्युत्तमलोकप्राप्तिहेतोःषोडशश्राद्धान्तर्गतोनमासिक, द्वितीयमासिक, त्रैपाक्षिक,

---

अष्टम, नवम, दशम, एकादश, द्वादश उनाब्दिकमासिक श्राद्धेषु भनेर गर्नु पर्दछ। यदि त्यही वर्षभित्र अधिकमास परेको छ भने षोडशः भनेको स्थानमा सप्तदशः भन्ने प्रयोग गर्नु पर्दछ । अब श्राद्धको सामग्री एकत्र गरी आसनमा बसेर पहिले आचमन गरी बत्ती

तृतीयमासिक, चतुर्थ मासिक, पंचम मासिक, षष्ठमासिक, उनषाणमासिक, सप्तममासिक, अष्टममासिक, नवममासिक, दशममासिक, एकादश-मासिक, द्वादशमासिक, उनाब्दिकमासिक श्राद्धानि तन्त्रेणैकोद्दिष्टविधिना एकादशे द्वादशे वा अहं करिष्ये इति संकल्पं कुर्यात् ।। अधिकमासपाते षोडशपदस्थाने सप्तदशपदं योज्यम् ।। अधिकमासिकेति पदं प्रक्षिप्य वाक्येन कर्त्तव्यम् ।।७२।।

ततो देवताभ्यः इति त्रिः पठेत् ।। ततोऽपसव्येन कुशतिलजलान्यादाय

---

बाल्नू। अनि पूर्व फर्केर कुशले अपवित्रः० तीन पल्ट पढ़ी सबैतर्फ जल छर्की त्यही कुशले संकल्प गर्दा- अद्य० देखि तन्त्रेण एकोद्दिष्ट विधिना एकादशे वा द्वादशे अहं करिष्ये सम्म पढ्नू । अधिक मास परेको छ भने षोडश भनेको स्थानमा सप्तदशः भन्ने प्रयोग गर्नु पर्दछ ।।७२।।

अनि देवताभ्यः० तीन पल्ट पढेर अपसव्य भई कुश जल लिई संकल्प गर्दा- अद्य० देखि उनमासिकादि श्राद्धे इदमासनं ते०' आदि भन्नू र प्रत्येक बाहुनमा भिन्न-

अद्यामुकगोत्रस्यामुकप्रेतस्योनमासिकश्राद्धे इदमासनं ते मया दीयते तवोपतिष्ठतामिति क्लृप्तासनेषु क्रमेण तत्तत्पदप्रक्षेपेण वाक्यं कृत्वा कुशरूपाण्यासनानि दद्यात् ।। ततः अपहता असुरा रक्षाᳬसि वेदिषद इति वामावर्त्तेन तिलान् श्राद्धदेशे विकिरेत् ततः क्रमेण पुटकादीनि संस्थाप्य ।। तत्र पवित्रेस्थ इत्यादि मन्त्रेण प्रत्येकं क्रमेण क्षिपेत् । ततः उनमासिकार्घपात्रं वामहस्ते कृत्वा पुष्पसहितं पवित्रं नमो नारायणायेति मन्त्रेणान्नपात्रोपरि उत्तराग्रं धृत्वा । या दिव्या० इति मन्त्रेणार्घपात्रस्थ-

भिन्न आसन दिनू । अनि अपहता० पढेर सबैतिर तिल छार्किदिनु । अनि मूल अनुसार संकल्प पढेर सबै ब्राह्मणलाई कुशको आसन भिन्ना भिन्नै दिनु । अनि अपहताऽअसुरा० यो मन्त्र पढेर सबैतिर तिल छर्किदिनु । अनि सबै ब्राह्मणको अगाडि एकेक दुना राखेर मन्त्र पढ्दै जल तिल गन्ध पुष्प सबैका मन्त्र पढ्दै प्रत्येक दुनामा पवित्र समेत राख्नु । अनि प्रथम उनमासिकको अर्घ बायाँ हातमा लिनु अनि फूल पवित्र 'नमो नारायणाय' भनेर ब्राह्मणको वरिपरि घुमाएर राखि दिनु । अनि या दिव्या पढेर अर्घपात्र ढाक्नु र

जलमभिमंत्र्य कुशादिकमादाय अद्यामुकगोत्रामुकप्रेतोनमासिकश्राद्धे एष हस्तार्घस्ते मया दीयते तवोपतिष्ठतामिति पवित्रोपरि अर्घजलं ददद्युत्सृज्य ।।७३।।

एवमेव क्रमेण प्रत्येकं तत्तत्पदप्रक्षेपेण हस्तार्घमुत्सृजेत् ।। ततः पवित्रादिसहितान्यर्घपात्राणि क्रमेण प्रत्येकमासनवामपार्श्वे प्रेताय स्थानमसीति उत्तानमेव स्थापयित्वा तदुपरि कुशान् दद्यात् ।। ततो गन्धपुष्पादिना क्रमेण प्रत्येकं संपूज्य कुशादिकमादाय अद्यामुक-गोत्रामुकप्रेतोनमासिक-द्वितीयमासिक-त्रैपाक्षिक-तृतीयमासिक-चतुर्थ-

कुश लिएर संकल्प गर्दा अद्य० एष हस्तार्घस्ते मया दीयते तवोपतिष्ठताम् यति भनेर अलिकति जल बाहुनमा चढाई फूल पवित्र फेरि दुनोमै राखी दिनू ।।७३।।

यही क्रम सबै ब्राह्मणमा गर्नु पर्दछ । अनि सबै अर्घपात्र यथा क्रम ब्राह्मणको बायाँतिर उत्तानै राखिदिनू । अनि तीन तीन टुक्रा कुश सबै दुनामा राखि दिनु पर्दछ ।

मासिक-पंचममासिक-षष्ठमासिक-उनषाण्मासिक-सप्तमासिक-अष्टममासिक-नवममासिक-दशममासिक-एकादशमासिक-द्वादशमासिक-उनाब्दिक मासिकश्राद्धेषु एतानि गन्धपुष्पधूपदीपवासांसि ते मया दीयन्ते तवोपतिष्ठन्तामिति गन्धादिकमुत्सृजेत् ।। ततः क्रमेण प्रत्येकम् आसनसहितानामन्नपात्राणां चतुर्दिक्षु चतुरस्राणि मण्डलानि कृत्वा श्राद्धीयान्नाग्रभागं घृततिलजलयुतपुटकादौ कृत्वा एकत्रैव इदमन्नमेतद्-भूस्वामिपितृभ्यो नम इत्युत्सृजेत् ।।७४।।

ततः पुरुषतृप्तिक्षमं सोपस्करणमन्नं तिलजलं च क्रमेण प्रत्येकमुपनीय

---

अनि सबै ब्राह्मणको पूजा गरेर प्रत्येकलाई संकल्प मूल अनुसार गरि दिनू । त्यो संकल्प प्रत्येक मासिकको भिन्न भिन्न गर्नु पर्छ अनि क्रमले प्रत्येक ब्राह्मणको अगाडि भिन्न भिन्न जलले अलग-अलग मण्डल बनाउनू । अनि बीचमा एउटा सीधा राखेर तिल-घृत मधु जल मूल अनुसार राखेर इदमन्नं सजलं एतद् भूस्वामी० भनेर छाडिदिनु।।७४।।

अनि सबै ब्राह्मणको अगाडि एकेक सीधा राखेर तिल, घिउ, मह छरी दुनामा जल

अन्नं मधुनाभिघार्य पात्रालम्भनाङ्गुष्ठावगाहनं विना । पृथिवी ते पात्रं द्यौरपिधानमित्यादि स्वाहान्तम् ।। इदं विष्णुरित्यादि सुरेत्यन्तं च पठित्वा।। अपहता असुरा रक्षाꣳसि वेदिषद इति तिलानन्नोपरि विकीर्य्य कुशादिकमादाय अद्यामुकगोत्रायामुकप्रेतायोनमासिकश्राद्धे इदमन्नं सोपस्करं ते मया दीयते तवोपतिष्ठतामित्यन्नमुत्सृज्य एवं क्रमेण प्रत्येकं तत्तत्पदप्रक्षेपेणान्नान्युत्सृजेत् ।। ततो मधुव्वाता इति ऋचं मधु मधु मध्विति च पठेत् ।। अन्नहीनमित्यादि मन्त्रम् ।। नमस्तुभ्यं विरूपाक्ष नमस्तेऽनेकचक्षुषे।। नमः पिनाकहस्ताय वज्रहस्ताय वै नमः।। इति पठेत् ।। अत्र

राखेर पात्रालम्भन अंगुष्ठावगाहन नगर्नू। अनि पृथिवी ते पात्रं र इदं विष्णु० पढी अपहताऽअसुरा पढेर तिल छर्की कुश लिएर संकल्पमा अद्यामुकगोत्रा० देखी उपतिष्ठताम् सम्म पढेर संकल्प भूमिमा छाडिदिनू । यही क्रम सबै सीधामा गर्नु पर्दछ । अनि मधुव्वाता० र मधु मधु मधु भन्नु अनि अन्नहीनं र नमस्तुभ्यं पढ्नू । यहाँ विकर, रेखाकरण, आगो घुमाउन वर्जित छ । अनि सव्य भएर आचमन गरी अपसव्य भएर

विकिरदानं रेखाकरणं उल्मुकभ्रमणं च न भवति ।। सव्यंकृत्वा-चम्याऽपसव्यं कृत्वा वेदीं निर्माय ।।७५।।

तदुपरि पश्चिमतः क्रमेण प्रत्येकं पिण्डस्थानोपरि छिन्नमूलान् कुशान् दक्षिणाग्रानास्तीर्य्य । तिलजलगन्धयुतपुटकादिकं वामहस्ते कृत्वा कुशादिकमादाय ।। अद्यामुकगोत्रामुकप्रेतोनमासिकश्राद्धे इदमवनेजनं ते मया दीयते तवोपतिष्ठतामिति अवनेजनं सर्व पश्चिमास्तृतकुशोपरि दत्त्वा ।। एवमेव क्रमेण प्रत्येकं तत्तत्पदप्रक्षेपेणावनेजनानि दद्यात् ।। ततस्तिलघृतमधुयुक्तेनान्नेन नारिकेलप्रमाणान् पिण्डान् कृत्वा कुशादिसहित-

---

सबै ब्राह्मणको अगाडि बालुवाको वेदी बनाउनू ।।७५।।

त्यसमाथि छिन्नमूल कुश बिछाउनू अनि कुश लिएर संकल्प पढी अवनेजन दिनू । अनि तिल घृत मधु युक्त कपित्थ वा नारिवल प्रमाणका पिण्ड बनाएर प्रथम पिण्ड लिई- अद्यामुक० तवोपतिष्ठाताम् सम्म पढेर अवनेजन माथि पिण्ड राखिदिनू, यही

**प्रथमपिण्डमादाय अद्यामुकगोत्रामुकप्रेतोनमासिकश्राद्धे एष पिण्डस्ते मया दीयते तवोपतिष्ठतामिति सर्वपश्चिमावनेजनस्थाने पिण्डं दत्वा, एवमेव क्रमेण प्रत्येकं तत्तत्पदप्रक्षेपेण द्वितीयादि पिण्डान्दद्यात् ।। ततो दर्भमूलेन करं प्रोक्ष्य सव्यं कृत्वाऽऽचम्य हरिं स्मृत्वाऽपसव्यं कृत्वा कुशादिकं गृहीत्वा अद्यामुकगोत्रामुकप्रेतोनमासिकश्राद्धपिण्डे इदमवनेजनं ते मया दीयते तवोपतिष्ठतामिति प्रथमपिण्डे अवनेजनं दत्वा एवमेव क्रमेण प्रत्येकं द्वितीयादि पिण्डेषु तत्तत्पदप्रक्षेपेण प्रत्यवनेजनं दद्यात् ।। ततो नीवीं विस्त्रंस्य सव्यंकृत्वाऽऽचम्याऽपसव्यं कृत्वा वामेन पाणिना धृतं सूत्रं दक्षिणेनादाय उभाभ्यां हस्ताभ्यां प्रथमपिण्डोपरि प्रेतैतत्ते वास इति**

क्रमले सबैपिण्ड आसनमा राखिदिनू अनि कुशले हात पुछेर सव्यभई आचमन गरेर अपसव्य भई प्रत्येक पिण्डमा प्रत्यवनेजन संकल्प मूल अनुसार पढ्दै भिन्न भिन्न दिनू । अनि कम्मरमा छोड्दिनू । सव्य भएर आचमन गरी अपसव्य भएर सबै पिण्डमा अलग

सूत्रं दत्वा एवं द्वितीयादि पिण्डेष्वपि प्रत्येकं सूत्रं दद्यात् ।।७६।।

गन्धादिना क्रमेण पिण्डानभ्यर्च्य ।। कुशादिकमादाय अद्यामुकगोत्रा-मुकप्रेतोनमासिक-द्वितीयमासिक-त्रैपाक्षिक, तृतीयमासिक-चतुर्थमासिक-पंचममासिक-षष्ठमासिकोनषाण्मासिक-सप्तममासिकोऽष्टममासिक-नवममासिक दशममासिक एकादशमासिक-द्वादशमासिकोनाब्दिक-श्राद्धपिण्डेषु एतानि गन्धपुष्पधूपदीपनैवेद्यानि ते मया दीयन्ते तवो-पतिष्ठन्तामित्युत्सृजेत्।। ततः पिण्डशेषान्नं पिण्डसमीपे विकीर्य्य। शिवा

---

अलग प्रेतैतत्ते वासः भनेर सूत्र (काँचो धागो) चढाउनू ।।७६।।

अब पिण्डपूजा गर्दा सबैलाई क्रमले गरिदिनू । अनि जल कुश लिएर अद्य० देखि उपतिष्ठन्ताम् सम्म पढेर सबैमा चढाइदिनू । अनि पिण्ड शेष नगीचै ल्याएर राखिदिनू। अनि प्रत्येक पिण्डको पूजा गर्नु र भिन्न भिन्न संकल्प गरिदिनु । अनि बाहुनमा जल, फूल र अक्षता मूलमा हेरेर मन्त्र पढ्दै सबैमा चढाइ दिनू अनि संकल्प गरेर मूल अनुसार

आपःसन्तु इति जलं । सौमनस्यमस्त्विति पुष्पं । अक्षतं चारिष्टमस्त्विति तण्डुलान् क्रमेण प्रत्येकम् अन्नपात्रोपरि क्षिपेत् ।। कुशादिकमादाय अद्यामुकगोत्रस्यामुकप्रेतस्योनमासिकश्राद्धे दत्तैतदन्नपानादिकमुपतिष्ठतामित्यक्षय्योदकं दत्वा ।। एवमेव क्रमेण तत्तत्पदप्रक्षेपेणाऽक्षय्योदकं दद्यात् ।। सव्यं कृत्वा अघोरः प्रेतोऽस्तु इति उच्चार्य्य दक्षिणां दिशं पश्यन्सर्वेषु पिण्डेषु पूर्वाग्रामेकां जलधारां दद्यात् ।। अत्राशीः प्रार्थना निषेधः।। ततः अपसव्यं कृत्वा सर्वेषु पिण्डेषु क्रमेण सपवित्रान् कुशान् धृत्वा पुटकादिस्थजलादिना मन्त्रपाठं विना, इदमूर्ज्जन्ते मया दीयते

सबैलाई अक्षय्योदक दिनु पर्दछ । अनि सव्य भएर अघोरः प्रेतोऽस्तु यति भनेर सबै पिण्डमा पूर्वाग्र पारेर जलधारा दिनू । यहाँ आशिष प्रार्थना वर्जित छ । अब अपसव्य भएर सबै अर्घपात्रका फूल पवित्र पिण्डहरूमा क्रमले चढाई दिनू । अनि दुनामा जल

तवोपतिष्ठतामिति प्रथमपिण्डस्थसपवित्रकुशोपरि दक्षिणाग्रां जलधारां दद्यात् ।।७७।।

ततः पिण्डानाघ्रायोत्थापयेत् । पिण्डाधारकुशान् वह्नौ क्षिपेत् ।। अर्घपात्राणि संचाल्य।। सव्यं कृत्वाऽऽचम्य दक्षिणाद्रव्यसहितं कुशादिक-मादाय अद्यामुकगोत्रस्यामुकप्रेतस्य कृतैतदूनमासिकद्वितीय त्रैपाक्षिक तृतीयमासिक चतुर्थमासिक पंचममासिक षष्ठमासिक उनषाण्मासिक, सप्तममासिक अष्टममासिक नवममासिक दशममासिक एकादशमासिक-द्वादशमासिकोनब्दिकश्राद्धप्रतिष्ठार्थमिदं रजतं चन्द्रदैवतं यथा यथा

---

लिएर मन्त्र नपढी इदमूर्ज्जन्ते० भनेर प्रत्येक पिण्डमा भिन्ना -भिन्नै चढाउनु ।।७७।।

अनि पिण्डको बास्ना लिएर उठाउनु । बिछाएको कुश आगोमा हालिदिनू । अर्घपात्र चलाइ दिनु । अनि सव्य भएर आचमन गरी दक्षिणा भिन्न भिन्न ब्राह्मणलाई

नामगोत्रेभ्यो ब्राह्मणेभ्यो दक्षिणां दातुमहमुत्सृजे इति दक्षिणां दद्यात्।। ततो देवताभ्यः पितृभ्यश्च महायोगिभ्य एव च इत्यादि त्रिवारं पठेत्।। ततोऽपसव्यं कृत्वा दीपाच्छादनं विधाय हस्तौ पादौ प्रक्षाल्याचम्य श्राद्धसंपूर्णताकामः प्रमादात्कुर्वतां कर्म प्रच्यवेताध्वरेषु च ।। स्मरणादेव तद्विष्णोः संपूर्णं स्यादिति श्रुतिरिति पठित्वा विष्णुं स्मरेत् ।। श्राद्धीयवस्तूनि ब्राह्मणेभ्यः प्रतिपादयेत् ।। इति षोडशश्राद्धांतर्गतोनमासिकादीनां पञ्चदशानां श्राद्धानां तन्त्रेणापात्रकप्रयोगः।।७८।।

मूल अनुसार संकल्प गरेर दिनु । अनि देवताभ्यः० तीन पल्ट पढिदिनू । अब अपसव्य भएर बत्ती ढाकिदिनू सव्यभएर हात पाउ पखाल्नु । अनि प्रमादात्० आदि मन्त्र पढेर विष्णुको स्मरण गर्नु । श्राद्ध गरेको सामग्री ब्राह्मणलाई दिनू ।।७८।।

इति पंचदशश्राद्धानि समाप्तानि ।।

# मध्यमषोडशी श्राद्धम्

अथ सपिण्डीकरणेति कर्त्तव्यता तत्र मातृविषये शंखः।। मातुः सपिण्डीकरणं कथं कार्यं भवेत् सुतैः।। पितामह्यादिभिः सार्द्धं सपिण्डीकरणं स्मृतम् ।। कारिकायाम् ।। पितामह्यादिभिः सार्द्धं मातरं तु सपिण्डयेत् ।। सहगमने यमः। पत्या चैकेन कर्त्तव्यं सपिण्डकरणं स्त्रियाः ।। हारितोपि ।। स्वेन भर्त्रा सहैवास्याः सपिण्डीकरणं स्त्रियाः। यकत्वमागता यस्माच्चरुमन्त्राहुतिव्रतैः ।। पत्नीविषये पैठिनसिः।। अपुत्रायां मृतायां तु पतिः कुर्यात् सपिण्डताम् । श्वस्त्रादिभिः सहैवास्याः सपिण्डीकरणं भवेत् ।। पुत्रिकापुत्रकर्तृके सपिण्डने मनुः।। मातुः प्रथमतः पिण्डं निर्वपेत्पुत्रिका सुतः ।। द्वितीयं तु पितुस्तस्यास्तृतीयन्तु

यसमा सपिण्डी गर्ने विषयमा र सती जाने विषयमा पनि अनेक ऋषि-मुनिहरूको

पितुः पितुः ।। पतिपुत्ररहितायाः स्त्रियाःसपिण्डनमेव निषिद्धं किंतु षोडशश्राद्धान्येन भवन्ति ।। तथा च मार्कण्डेयः।। स्त्रीणामप्येवमेवैत-देकोद्दिष्टं विधीयते । सपिण्डीकरणं तासां पुत्रभावे न विद्यते ।। पुत्रेणैव तु कर्त्तव्यं सपिण्डीकरणं स्त्रियाः ।। पुरुषस्य पुनस्त्वन्ये भ्रातृपुत्रादयोऽपि ये ।। अत्र पुत्राभाव इत्युपलक्षणम् ।। पतिपुत्राभावे द्रव्यः।। पतिकर्तृकस्य सपिण्डस्य विधानात् ।। एवं सपत्नीपुत्रेऽपि विद्यमाने स्त्रियाः सपिण्डनं भवति ।। बह्वीनामेकपत्नीनामेका चेत्पुत्रिणी भवेत् । सर्वास्तेनैव पुत्रेण पुत्रिण्यो मनुरब्रवीदिति ।। अपुत्रायाः सपत्न्या पुत्रिणीत्यतिदेशात् ।। पितुः सपिण्डनं पितामहादिभिः सह कुर्यात् ।। व्युत्क्रममृते तु सपिण्डीकरणम् ।। ब्रह्मपुराणे ।। मृते पितरि यस्याथ विद्यते च पितामहः ।। तेन देयास्त्रयः पिण्डाः प्रपितामहपूर्वकाः ।।

मत विस्तार पूर्वक बताइएको छ । यस विषयमा धेरै बुझाउने स्थान नहुनाले र

तेभ्यश्च पैतृकः पिण्डो नियोक्तव्यश्च पूर्ववत् ।। मातर्यग्रे मृतायां तु विद्यते च पितामही । प्रपितामहीपूर्वं तु कार्यस्तत्राप्ययं विधिः।। एवं च जीवंतमतिक्रम्य त्रिकपूरणं कर्तव्यम् ।। व्युत्क्रमाच्च प्रमीतानां नैव कार्य्या सपिण्डता इति च मातृपितृभर्त्रेति अतिरिक्तविषयम् अत एव स्कान्दे- व्युत्क्रमेण मृतानां न सपिण्डीकृतिरिष्यते ।। यदि माता यदि पिता भर्त्ता नैष विधिः स्मृतः।। एष विधिः सपिण्डननिषेधरूपः।। पतिविषये उशनाः ।। सपिण्डीकरणं तेषां न कर्तव्यं सुतादिभिः।। त्रिदंडग्रहणादेव प्रेतत्वं नैव जायते ।। शूद्रस्य तु विष्णुः।। मन्त्रवर्जं हि शूद्राणां द्वादशेऽहनि कीर्तितम् ।। अमावस्याश्राद्धकारि शूद्रविषयमेतदपरार्के कल्पतरौ च।। यत्तु कात्यायनः ।। सर्वेषामेव वर्णानामाशौचान्ते सपिण्डनमिति देव्यतिरिक्तविषयम् ।। त्रैवर्णिकजातस्य शूद्रस्य तु शंखेन लिख्यते । नो यतेस्तु सपिण्डत्वं येषां शूद्रकुलोद्भवः ।। सर्वे शूद्रत्वमायान्ति

यदि स्वर्गजितोपि तम् ।। सपिण्डीकरणे ज्येष्ठपुत्रस्यैवाधिकारः ।। तथा च वायुपुराणे।। श्राद्धानि षोडशं दत्वा न तु कुर्यात्सपिण्डनम् ।। प्रोषितावसते पुत्राः कालादपि चिरादपि । यदि षोडश श्राद्धानि कनिष्ठभ्रात्रादिना कृतानि तदा ज्येष्ठः सपिण्डनमेव कुर्य्यात् इत्यपरार्के।। इदं वसति ज्येष्ठे तदभावे कनिष्ठेन ।। तदभावे भ्रात्राद्यधिकारिभिः पुरुषस्य सपिण्डनं कार्यम् ।। भ्राता वा भ्रातृपुत्रो वा सपिण्डः शिष्य एव वा।। सपिंडीकरणं कुर्यात् पुत्रहीने मृते सति ।। इति मनुवचनात्।। तथा ज्येष्ठेन वा कनिष्ठेन सपिण्डीकरणे कृते ।। देशान्तरगतानां च पुत्राणां च कथं भवेत् ।। श्रुत्वा तु वपनं कार्यं दशाहान्नं तिलोदकम्।। सपिण्डीकरणं कुर्य्यात्तद्वदेकादशेऽहनि ।। द्वादशाहेन कर्त्तव्यमिति भ्रात्रा यथाऽब्रवीत्।। स्मृत्यर्थसारे तु ब्रह्मचारिणां अनपत्यानां च सपिण्डनं

नास्ति तेषां सदैकोद्दिष्टमेव। व्युत्क्रममृतानां व्यवहितं सपिण्डनं कार्यं न वा केचित्सर्वं सपिण्डनमाहुः ।। यतीनां प्रेतत्वं नास्ति अतस्तेषां नैकोद्दिष्टं न सपिण्डीकरणं किन्त्वेकादशेऽहनि पार्वणं कार्यम् ।। दंडग्रहणात्पूर्वं मृते दाहादिसपिण्डनान्तं सर्वं कार्यं भवति ।। एकाहाशौचे द्वादशेऽहनि तृतीयेऽहनि वा।। त्र्यहाशौचे पञ्चमेऽह्नि सपिण्डनं कार्यम् ।। तच्च सपिण्डनमनेककालत्वेऽपि कलौ द्वादशाहे कार्य्यम्।। आनन्त्यात्कुलधर्माणां पुंसां चैवायुषः क्षयात्।। अनित्यत्वाच्छरीरस्य द्वादशाहे प्रशस्यते इति वचनात्।। गोभिलः।। द्वादशाहादिकालेषु प्रमादादावनुश्रितम्।। सपिण्डीकरणं कुर्यात्कालेषूत्तरभाविषु। उत्तर भाविषु त्रिपक्षादिषु।। ते च काला भविष्यपुराणे उक्ताः।। सपिण्डीकरणं कुर्याद्यजमानस्त्वनग्निमान्।। अनाहिताग्नेः प्रेतस्य पूर्णाब्दे भरतर्षभ। द्वादशेऽहनि पृष्ठे वा त्रिपक्षे वा त्रिमासि वा।। एकादशेऽपि वा मासि मङ्गलस्यादुपस्थितम्।। षष्ठेमासीत्यन्वयः।। यदा मङ्गलं वृद्ध्याद्युपस्थितं स्यात्ततः पूर्वमपि कालमिच्छन्ति ।।७९।।

अथ सपिण्डीकरणप्रयोगः।। सपिण्डीकरणे बहुधा अपात्रकमेवाचरन्तीति अपात्रक प्रयोग एव लिख्यते ।। तत्र मध्यान्हे कर्त्ता स्नातः शुचिराचान्तः पूर्वोपकल्पितं स्थापितगौरसर्षपादिरक्षोघ्नं श्राद्धदेशं गत्वा पूर्वाभिमुखम् उपविश्य रक्षोघ्नदीपं प्रज्वाल्य सव्येन ॐ यद्देवा देवहेडनमिति कण्डिकात्रयेण कर्म्मपात्रं कृत्वा कुशत्रयसहितं कर्मपात्रोदकमादाय ॐ अपवित्रः पवित्रो वेत्यादि पठित्वा ॐ पुण्डरीकाक्षः पुनात्वित्युक्त्वा श्राद्धदेशं द्रव्याण्यात्मानं च सिंचेत् ।। ॐ अद्यामुकगोत्रस्यामुकप्रेतस्य प्रेतत्वनिवृत्तिपितृलोकप्राप्त्यर्थममुकगोत्रैरस्मत्पितामहप्रपितामहवृद्धप्रपितामहैरमुकामुकशर्मभिः वसुरुद्रादित्यस्वरूपैः सहकालकामविश्वेदेवपूर्वकं

---

*अब सपिण्डीकरण प्रयोगमा* - मध्यान्ह कालमा कर्ता स्नान गरेर पवित्र भई पूर्व फर्केर सबैतिर पहेंलो सर्स्यूं छरी आसनमा बसेर बत्ती बाली त्यसको पूजा गरेर जनै फेरी सव्य भएर ॐ यद्देवा देवहेडनन्० मन्त्रले कर्मपात्र बनाई तीन टुक्रा कुश लिएर

सपिण्डीकरणं मृताहाद् द्वादशाहे पार्वणैकोद्दिष्टविधिनाहं करिष्ये इति संकल्पं कुर्य्यात् ।। मातुः सपिण्डीकरणे तु अद्यामुकगोत्राया मातुरमुकप्रेतायाः प्रेतत्वनिवृत्तिपितृलोकप्राप्त्यर्थममुकगोत्राभिरस्मत्पितः-महीप्रपितामहीवृद्धप्रपितामहीभिरमुकामुकदेवीभिर्वसुरुद्रादित्यस्वरूपाभिः सहेत्यादि पूर्ववत् ।। भ्रात्रादीनां सपिण्डीकरणे अद्यामुकगोत्रस्यामुकप्रेतस्य प्रेतत्वनिवृत्तिपितृलोकप्राप्त्यर्थममुकगोत्रैः स्वपितृपितामहप्रपितामहैर-मुकामुकशर्मभिर्वसुरुद्रादित्यस्वरूपैः सहेत्यादि पूर्ववत् ।। सहगमने तु अद्यामुकगोत्राया मातुरमुकप्रेतायाः प्रेतत्वनिवृत्तिपितृलोकप्राप्त्यर्थ-ममुकगोत्रेण स्वभर्त्रा सह सपिण्डीकरणं मृताहाद् द्वादशाहेऽहं करिष्ये

कर्मपात्रको जलले- ॐ अपवित्रः पवित्रो वा० पढी ॐ पुण्डरीकाक्षः पुनातु भनी श्राद्ध द्रव्यमा र आफूलाई पनि जल छरी त्यही कुशले संकल्प गर्दा ॐ अद्यामुकगोत्रस्य० देखि अहं करिष्ये सम्म पढ्नू । आमाको र दाजु भाईको सपिण्डी गर्दा भन्नु पर्ने

इति विशेषः ।। ततः त्रिः प्रणवव्याहृतिसहितां गायत्रीं जपेत् ।। ततो देवताभ्यः इति त्रिः पठेत् ।।८०।।

ततो देवश्राद्धार्थोपकल्पितासनादि देशमागत्य सव्येनैव उदङ्मुख उपविश्य कुशादीन्यादाय ॐ अद्यामुकगोत्रस्यामुकप्रेतस्य सपिण्डीकरणनिमित्तकामुकगोत्रपितामहप्रपितामहवृद्धप्रपितामहवसुरुद्रादित्यस्वरूपाणां श्राद्धसंबन्धिनां कालकामविश्वेषां देवानाम् इदमासनं वो नम इति पूर्वाग्रं कुशरूपमासनं यवजलप्रोक्षितमुत्सृजेत् ।। ॐ विश्वान् देवानामावाहयिष्ये इत्युक्त्वा ॐ विश्वे देवास इति मन्त्रेणावाह्य ॐ यवोसि

---

वाक्यहरू मूलमा हेर्दै गए थाहा पाउन सकिन्छ । अब तीन पल्ट प्रणव सहित गायत्री जपेर देवताभ्यः० तीन पल्ट भन्नू।।८०।।

अब विश्वेदेव ब्राह्मणतिर सव्य भएर कुश जल लिनू - संकल्पमा ॐ अद्यामुकगोत्र० देखि इदमासनं वो नमः' सम्म पढी कुशरूप आसन दिई ॐ आवाहयिष्ये भनेर यवोसि

यवयास्म द्वेषो यवयारातीः इति मंत्रेण श्राद्धदेशे यवान् विकीर्य्य ।। ॐ विश्वेदेवाः शृणुतेममित्यादि बर्हिषिमादृदयध्वमित्यन्तं पठित्वा ।। ॐ आगच्छन्तु महाभागा विश्वेदेवा महाबलाः।। ये यत्र विहिताः श्राद्धे सावधाना भवन्तु ते इति पठेत् ।। ततः स्वमन्त्रेण पवित्रं पुटकादौ पूर्वाग्रं धृत्वा जलयवगन्धपुष्पाणि स्व-स्वमन्त्रैः क्षिपेत् ।। ततो अर्घपात्रं वामहस्ते कृत्वा पुष्पसहितं पवित्रं ॐ नमो नारायणायेति मंत्रेण अन्नपात्रे पूर्वाग्रं धृत्वा ॐ या दिव्या इत्यादिना अर्घपात्रस्थजलमभिमन्त्र्य

---

यवया० पढ्दै जौ छर्केर विश्वेदेवा० र आच्छन्तु महाभागा० पढेर बाहुनको आगाडि दुना राखी पवित्र, जल, फूल, अक्षता, जौ हाली बायाँ हातमा दुना उचाली ॐ नमो नारयणाय भनी फूल पवित्र बाहुनमा राखी ॐ या दिव्या० मन्त्र पढेर उत्तानो हातले दुना ढाकी कुश जौ लिएर संकल्पमा मूल अनुसार अद्यामुक० देखि यवजलप्रोक्षितमुत्सृजेत्' भनेर ब्राह्मणमा छाडिदिनु । अनि ॐ विश्वान् ० र ॐ विश्वेदेवा सऽ० यस मन्त्रले

कुशयवजलान्यादाय ॐ अद्यामुकगोत्रस्यामुकप्रेतस्य सपिण्डीकरणनिमित्तकामुकगोत्रपितामहप्रपितामहवृद्धप्रपितामहामुकामुकशर्म्मवसुरुद्रादित्यस्वरूपश्राद्धसंबंधिनः कालकामविश्वेदेवा एष हस्तार्घो वो नमः इति पवित्रोपरि अर्घजलं दददुत्सृजेत् ।। ततः पवित्रसहितमर्घपात्रमासनदक्षिणपार्श्वे कालकामविश्वेभ्यो देवेभ्यः स्थानमसीति देवार्घपात्रं उत्तानं स्थापयेत् ।।८१।।

ततो गंधादिभिः संपूज्य कुशादिकमादाय ॐ अद्यामुकगोत्रस्यामुकप्रेतस्य सपिण्डीकरणनिमित्तकामुकगोत्रपितामहप्रपितामहवृद्धप्रपिता-

आवाहन गर्नु। यवोसि यवया०। ॐ विश्वेदेवा० ॐ आगच्छन्तु० मन्त्र पढेर अर्को दुना लिई ॐ नमो नारायणाय भनेर फूल पवित्र बाहुनमा राख्नु या दिव्या० ले ढाकी कुश जौ लिएर संकल्प मूल अनुसार गरिदिनू । अनि अर्घपात्र बाहुनको दाहिनेतिर उत्तानै राखिदिनू ।।८१।।

अनि विश्वेदेवको पूजा गरेर कुश-जल लिई संकल्पमा ॐ अद्य० देखी वासांसि वो

महामुकामुकशर्मवसुरुद्रादित्यस्वरूपश्राद्धसंबंधिनः कालकामविश्वेदेवा एतानि गंधपुष्पधूपदीपवासांसि वो नम इति गंधादिकमुत्सृजेत् ।। ततोऽपसव्येन तिलघृतजलयुतमन्नं मोटकादिसहितमादाय दक्षिणाभिमुखः ॐ इदमन्नमेतद्भूस्वामिपितृभ्यो नमः इत्युत्सृजेत् ।। ततः सव्यं कृत्वा आसनसहितस्यान्नपात्रस्य चतुर्दिक्षु चतुष्कोणं मण्डलं विधाय देवान्ध्यायन्सोपस्करं तिलजलयुतमन्नमुपनीय अन्नं मधुनाभिघार्य ऋजुहस्ताभ्यामन्नपात्रमालभ्य ।। ॐ पृथिवी ते पात्रं द्यौरपिधानं ब्राह्मणस्य मुखे अमृते अमृतं जुहोमि स्वाहा।। इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् । समूढ मस्य पाꣳसुरे स्वाहा इति पठित्वा ।। ॐ इदमन्नमित्यन्ने।।

---

नमः' सम्म पढिदिनू। अब अपसव्य भएर एउटा सीधा राखी इदमन्नं एतद् भूस्वामी० भनेर जल-कुश छाडि दिनू । अनि सव्य भएर बाहुनको अगाडि जलको चार कुने धर्का बनाई सीधा राखेर जौ घिऊ मह छरेर रित्तो हात देखाई ॐ पृथिवी ते पात्रं० पढेर ॐ

ॐ इमा आप इति जले ।। ॐ इदमाज्यं इति घृते ।। ॐ इदं हविरिति पुनरन्ने दक्षिणकराङ्गुष्ठं निवेश्य।। ॐ यवोसि यवयास्म द्वेषो यवयारातीरिति मन्त्रेण यवानन्नोपरि प्रक्षिप्य कुशयवजलान्यादाय ॐ अद्यामुकगोत्रस्यामुकप्रेतस्य सपिण्डीकरणनिमित्तकामुकगोत्रपितामह-प्रपितामहवृद्धप्रपितामहामुकामुकशर्मवसुरुद्रादित्यस्वरूपेभ्यः श्राद्ध-सम्बन्धिभ्यः कालकामविश्वेभ्यो देवेभ्यः एतद्वोऽन्नं सोपस्करणं नम इत्यन्नमुत्सृजेत् ।।८२।।

एवं देवकाण्डं श्राद्धं निवर्त्य हस्तौ पादौ प्रक्षाल्याऽचम्य प्रेतश्राद्ध-देशमागत्योपविश्य कृतापसव्यो दक्षिणाभिमुखः कर्मपात्रं कृत्वा

---

इदं विष्णु० भन्नु अनि हात जोरेर प्रश्नोत्तर न गरी, ॐ यवोसि यवयास्म० अन्नमा जौ छर्किदिनू।। अनि कुश जौ लिएर संकल्प मूल अनुसार पढिदिनू ।।८२।।

यसरी विश्वेदेवको कार्य सकेर हात-पाउ पखाली आचमन गरेर प्रेत श्राद्धतिर गई

कुशादीन्यादाय अद्यामुकगोत्रस्यामुकप्रेतस्य सपिण्डीकरणश्राद्धे इदमासनं ते मया दीयते तवोपतिष्ठतामिति कुशरूपमासनमुत्सृजेत् । ततो पितृश्राद्ध-देशमागत्य विधिवत्कर्मपात्रं कृत्वा मोटकादिकमादाय ॐ अद्यामुक-गोत्रस्यामुकप्रेतस्य सपिण्डीकरणनिमित्तकश्राद्धेअमुकगोत्रस्य पितामहस्या-मुकशर्मणो वसुस्वरूपस्येदमासनं ते स्वधा इति स्थानत्रयेषु क्लृप्तासनेषु सर्व्वपश्चिमाश्रितस्थानस्थिते आसने मोटकरूपमासनमुत्सृजेत् ।। पुन-र्मोटकादिकमादाय ॐ अद्यामुकगोत्रस्यामुकप्रेतस्य सपिण्डीकरणनिमित्त-कश्राद्धे अमुक गोत्रस्य प्रपितामहस्यामुकशर्मणो रुद्रस्वरूपस्य इदमासनं ते स्वधा इति दत्तासने पूर्वं प्रपितामहाय मोटकरूपमासनमुत्सृज्य पुनर्मोट-

अपसव्य भएर दक्षिणतिर फर्किई कर्मपात्र बनाउनू र कुश लिएर अद्य० देखि तवोपतिष्ठताम् सम्म पढेर कुशको आसन बाहुनमा राखिदिनू । अनि पितृको श्राद्धतिर आएर विधिपूर्वक कर्मपात्र बनाई मोटक लिएर संकल्प गर्दा - ॐ अद्यामुक० देखि ते स्वधा० पढेर

कादिकमादाय ॐ अद्यामुकगोत्रस्यामुकप्रेतस्य सपिण्डीकरणनिमित्तकश्राद्धे अमुकगोत्रस्य वृद्ध प्रपितामहस्यामुकशर्मणो आदित्यस्वरूपस्य इदमासनं ते स्वधा इति सर्वं पूर्वं वृद्धप्रपितामहाय मोटकरूपमासनमुत्सृजेत् । ततः प्रेतवर्ज्यं पितामहादीनुद्दिश्य पितृनावाहयिष्ये इत्युक्त्वा ॐ उशंतस्त्वा निधी मह्युशंतः समिधीमहि ।। अशन्नु शतऽआवह पितृन् हविषेऽ-अत्तवे ।। इति पितामहादीनावाह्य ।। ॐ अपहता असुरारक्षांᳬसि वेदिषद इति श्राद्धस्थाने तिलान् विकीर्य ।। ॐ आयन्तु नः पितरः सोम्यासोऽग्निष्वात्ताः पथिभिर्देवयानैः।। अस्मिन्यज्ञेस्वधया मदन्तोधिब्रुवन्तु तेवन्त्वस्मान् इति मन्त्रं जपेत् ।।८३।।

पितामह, प्रपितामह र वृद्ध प्रपितामह तीनै जनाको भिन्न भिन्न संकल्प मूल अनुसार पढेर मोटकको आसन दिनू । अनि केवल पितामहादीलाई- ॐ उशन्तस्त्वा० ॐ अपहता० पढेर तिल छरिदिनु । अनि ॐ आयन्तुनः० मन्त्र पढिदिनू ।।८३।।

ततोऽर्घार्थं पूर्वभागे एकं पुटकमासाद्य तत्पश्चिमभागे दक्षिणसंस्थं पुटकपात्रत्रयमासाद्य तेषु चतुष्टयेषु पवित्रेस्थ इति मंत्रेण प्रत्येकं दक्षिणाग्राणि पवित्राणि धृत्वा जलतिलगंधपुष्पाणि स्वस्वमन्त्रैः प्रत्येकं तेषु क्षिपेत् ।। ततः प्रेतार्घपात्रं वामहस्ते कृत्वा नमो नारायणायेति मंत्रेणान्नपात्रोपरि पवित्रम् उत्तराग्रं धृत्वा या दिव्या ऽआप इत्यादिमंत्रेणार्घपात्रस्थजलं दक्षिणहस्तेनाच्छादितमभिमंत्र्य कुशादिकमादाय अद्यामुकगोत्रामुकप्रेतसपिण्डीकरणश्राद्धे एष हस्तार्घस्ते मया दीयते तवोपतिष्ठताम् इति पवित्रोपरि चतुर्भागजलं दददुत्सृजेत् । ॐ अद्यामुकगोत्रामुकप्रेतार्घपात्रोदकम् अमुकगोत्राणां पितामहप्रपितामहवृद्धप्रपितामहानाम-

---

अब अर्घको निम्ति तीन दुना यथा क्रमले राखेर सबैमा मन्त्र पढ्दै पवित्र राख्नू र जल तिल गन्ध पुष्प मन्त्र पढ्दै दुनाहरूमा राख्नू । अनि प्रेतको अर्घपात्र बायाँ हातमा लिई नमो नारायणाय भनेर बाहुनमा फूल पवित्र राखिदिनु र या दिव्या० पढेर दुना

मुकामुकशर्मणामर्घपात्रोदकेन संयोजयिष्ये इत्युक्त्वा पितामहादिपात्रत्रये प्रेतार्घपात्रजलस्य भागत्रयं कृत्वा एकैकं भागं वक्ष्यमाणमन्त्रैः संयोजयेत्।। प्रेतार्घपात्रजलविभागे ये समाना इति मन्त्रद्वयपाठः।। निरूप्य चतुरः पिण्डान् श्राद्धदः प्रतिनामतः।। ये समाना इति द्वाभ्यामाद्यंतु विभजेत्त्रिधा।। एष एव विधिः प्रोक्त अर्घपात्रचतुष्टये इति वचनात् ।। मिताक्षरायां स्मृत्यर्थसारे च ।।

प्रेतार्घपात्रजलमादौ पितामहार्घपात्रे संयोज्याविशिष्ट जलेन प्रेतार्घं दद्यादित्युक्तम् ।।८४।।

तत्र क्रमः ।। सव्यं कृत्वाऽऽचम्याऽपसव्यं कृत्वा अन्यत् पुटकत्रयमग्रे

---

ढाकी कुश लिएर संकल्पमा अद्यामुक० देखि तवोपतिष्ठताम् सम्म पढ्नू । अनि मूल अनुसार प्रतिज्ञा संकल्प गर्नू र पितामहादि तीनै पात्रमा प्रेतार्घको जल तीन भाग गरेर एकेक भाग अगाडिका मन्त्रहरू भन्दै अलि अलि मिलाउनू ।।८४।।

धृत्वा प्रेतार्घपात्रं गृहीत्वा ये समानाः समनसः पितरो यमराज्ज्ये ।। तेषां लोकः स्वधा नमो यज्ञो देवेषु कल्प्यताम् ।। ये समानाः समनसो जीवाजीवेषु मामकाः तेषां श्रीर्मयि कल्पतामस्मिंल्लोके शतꣳसमाः।। इति मंत्रौ पठित्वा प्रेतार्घपात्रस्थलं तृतीयभागं पुटकान्तरे धृत्वा पुनरपि मंत्रद्वयं पठित्वा प्रेतार्घपात्रावशिष्ट तृतीयभागजलं पुटकान्तरे धृत्वा प्रथमपुटकस्य विभक्तजलतृतीयभागं प्रेतार्घपात्रे कृत्वा पवित्रपुष्पसहितं प्रेतार्घमादाय ॐ ये समानाः समनसो जीवाजीवेषु मामकाः। तेषां श्रीमयिकल्पतामस्मिँल्लोके शतꣳसमाः।। संसृजंतु त्वा पृथिवी वायुरग्निः प्रजापतिः।। संसृजध्वं च पूर्वेभिस्त्रिभिश्च पितृभिः सह।। संगच्छध्वं संवदध्वं संवो मनांसि जानताम् ।। देवा भागं यथा पूर्वे संजातानामुपासते।।

---

यसको क्रममा-सव्य भएर आचमन गरी अपसव्य भएर प्रेतार्घ बायाँ हातमा उचाली प्रपितामहको अर्घ दाहिने हातमा लिई ॐ ये समाना० आदि मन्त्रहरू पढी

समानो मंत्रः समिति समानो समानं मनः सह चित्तमेषां समानमन्त्रमभिमन्त्रये वः। समानेन वो हविषा जुहोमि समानीव आकूतिः समाना हृदयानि वः समानवस्तु वो मनो यथा वः सुसहासति ।। मधु वातेति ऋचमपि पठेदिति केचित् ।। इति मंत्रान्पठित्वा प्रेतार्घपात्रस्थतृतीयभागजलं पितामहार्घपात्रजले मेलयेत् ।। एवमपरं पुटकद्वयस्थितार्घपात्रजलं तृतीयभागद्वयं क्रमेण प्रत्येकं मंत्रान् पठित्वा प्रपितामहार्घपात्रजले वृद्धप्रपितामहार्घपात्रजले च क्रमेण मेलयेत् ।। ततः अमुकगोत्रामुक-प्रेतामुकगौत्रैः स्वपितृपितामहप्रपितामहैरमुकामुकशर्मभिर्वसुरुद्रादित्य-स्वरूपैः सहसायुज्यं गच्छेत्युक्त्वा पितामहार्घपात्रं वामहस्ते कृत्वा ॐ नमो नारायणायेति मन्त्रेण पवित्रमन्त्रपात्रोपरि धृत्वा ॐ या दिव्या आपः पयसेत्यादिना अर्घपात्रस्थजलमभिमंत्र्य मोटकादिकमादाय ॐ

अलिकति जल प्रेतार्घमा मिलाउनु । अब यही क्रमले संकल्प गर्दै पितामह र पितृको

अद्यामुकगोत्रस्यामुकप्रेतस्य सपिण्डीकरणनिमित्तकश्राद्धे अमुकगोत्र पितामहामुकशर्मन् वसुस्वरूपैष तेऽर्घः स्वधेति पवित्रोपरि अर्घजलं दददुत्सृजेत् ।। पवित्रपुष्पसहितमर्घपात्रमग्रे धारयेत् ।। ततः प्रपितामहार्घ-पात्रं वामहस्ते कृत्वा ॐ नमो नारायणेति मन्त्रेणान्नपात्रोपरि धृत्वा ॐ या दिव्याः आप इत्यादिनार्घपात्रस्थं जलमभिमंत्र्य मोटकादिक-मादाय ॐ अद्यामुकगोत्रस्यामुकप्रेतस्य सपिण्डीकरणश्राद्धे अमुकगोत्र-प्रपितामहामुकशर्मन् रुद्रस्वरूपैष तेऽर्घः स्वधेति पूर्ववदुत्सृजेत् ।। पवित्रपुष्पसहितमर्घपात्रमग्रे स्थापयेत् ।। तृतीयार्घपात्रं वामहस्ते कृत्वा ॐ नमो नारायणायेति पवित्रमन्नपात्रे धृत्वा ।। ॐ या दिव्या आपः इत्यादिना अर्घपात्रस्थं जलमभिमंत्र्य मोटकादिकमादाय ॐ अद्यामुकगोत्र-स्यामुकप्रेतस्य सपिण्डीकरणनिमित्तकश्राद्धे अद्यामुकगोत्रवृद्धप्रपितामहा-

पनि मन्त्र पढेर मिलाउनु पर्दछ । सबैको संकल्प मूलमा भिन्न भिन्न छ । अनि

मुकशर्मन्नादित्यस्वरूपैष तेऽर्घः स्वधेति पूर्ववदर्घमुत्सृजेत् ।। पवित्र-पुष्पसहितमर्घपात्रमग्रे स्थापयेत् ।। ततः प्रेतार्घपात्रं प्रेतासनवामपार्श्वे प्रेताय स्थानमसीत्युत्तानमेव स्थापयित्वा तदुपरि कुशान्दद्यात् ।।८५।।

ततः वृद्धप्रपितामहार्घपात्रस्थजलादिकं प्रपितामहार्घपात्रे कृत्वा तत्सर्वं पितामहार्घपात्रे कृत्वा पितामहार्घपात्रम् उत्तानं प्रपितामहार्घपात्रोपरि धृत्वा तद्द्वयं उत्तानैव वृद्धप्रपितामहार्घपात्रोपरि धृत्वा पात्रत्रयमेकदैव पिता-महासनवामपार्श्वे पितामहादिभ्यः स्थानमसीति न्युब्जंकृत्वा तदुपरि कुशत्रयं

---

पितृहरूको अर्घपात्र उसकै स्थानमा राख्नू । अनि प्रेतार्घपात्र ब्राह्मणको बायाँतिर प्रेताय स्थानमसी भनेर उत्तानै राखि दिनु त्यसमाथि तीन टुक्रा कुश राख्नू ।।८५।।

अनि वृद्ध प्रपितामहको अर्घको जल-फूल पितामहको अर्घमा र पितामहको अर्घको जल पिताको अर्घमा खन्याएर तीनै दुनाहरू खपटेर सव्य भई आँखामा जल तच्चक्षु० पढेर लगाई अपसव्य भएर तीनै दुना पितामहको बायाँ तिर पितामहादिभ्यः० भनेर घोप्ट्याइदिनु। र त्यसमाथि तीन टुक्रा कुश राखि दिनू । त्यो दक्षिणा पर्यन्त नचलाउनू ।।८६।।

दद्यात् ।। एवं स्थापितमर्घपात्रचतुष्टयं दक्षिणापर्य्यन्तं न चालयेत् ।।८६।।

क्रमेण प्रेतमारभ्य गंधादिभिः सर्वान्संपूज्य कुशादिकमादाय अद्यामुकगोत्रामुकप्रेत सपिण्डीकरणश्राद्धे एतानि गंधपुष्पधूपदीपवासांसि ते मया दीयते तवोपतिष्ठंतामिति प्रेताय गंधादिकमुत्सृजेत् ।। पुनर्मोटकादिकमादाय ।। ॐ अद्यामुकगोत्रस्यामुकप्रेतस्य सपिण्डीकरणनिमित्तकश्राद्धे अमुकगोत्राः पितामहप्रपितामहवृद्धप्रपितामहाः अमुकामुकशर्मणो वसुरुद्रादित्यस्वरूपाः एतानि गंधपुष्पधूपदीपवासांसि युष्मभ्यं स्वधा इति पितामहादिभ्यो गन्धादिकमुत्सृजेत् ।।८७।।

ततः प्रेतासनस्य चतुर्दिक्षु वामावर्तेन चतुष्कोणं मण्डलं विधाय अपरं पितामहादित्रिके मण्डलं कुर्य्यात् ।। ततः सव्यं कृत्वा प्राङ्मुख उपवीति पातितदक्षिणजानुः पुटकादौ सघृतमन्नं कृत्वा पुटकादिजले

ॐ अग्नये कव्यवाहनाय स्वाहा। इदमग्नये कव्यवाहनाय ।। ॐ सोमाय पितृमते स्वाहा । इदं सोमाय पितृमते।। इति आहुतिद्वयं तदन्नाग्रं जुहुयात् ।। अपसव्यं कृत्वा ।। अवशिष्टमन्नं पितामहादिपात्रे किञ्चित् दद्यात् ।। ततः क्रमेण प्रत्येकं सोपस्करमन्नमुपनीय पृथक् पुटकस्थित-सतिलजलञ्चोपनीय प्रेतपात्रादिस्थितान्नेषु मधु दद्यात् ।। ततः पात्रालं-भनाङ्गुष्ठावगाहनं विना ।। पृथिवी ते पात्रं द्यौरपिधानं ब्राह्मणस्य मुखे अमृते अमृतं जुहोमि स्वाहा। इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् । समूढमस्य पाᳬसुरे स्वाहा इति पठित्वा ।। अपहता असुरा रक्षाᳬसि वेदिषदः । इत्यन्नोपरि प्रचुरतिलान्प्रक्षिप्य कुशादीन्यादाय अद्यामुकगोत्रा-यामुकप्रेताय सपिण्डीकरणश्राद्धे इदमन्नं सोपस्करणं ते मया दीयते तवोपतिष्ठतामिति प्रेतान्नमुत्सृजेत् ।। ततः पितामहान्नपात्रे व्यस्ताभ्यां

हस्ताभ्यां न्युब्जाभ्यामालभ्य ।। ॐ पृथिवी ते इत्यादि जुहोमि स्वाहेत्यन्तं इदं विष्णुरित्यादि सुरे इत्यन्तं च पठित्वा ।। ॐ इदमन्नं । ॐ इमा आपः। ॐ इदमाज्यं । ॐ इदं हविरिति क्रमेणान्नजलघृतादिषु दक्षिणाङ्गुष्ठं निवेश्य।। ॐ अपहता असुरा रक्षाᳬंसि वेदिषद इत्यन्नोपरि तिलान्प्रक्षिप्य मोटकादीन्यादाय ॐ अद्यामुकगोत्रस्यामुकप्रेतस्य सपिण्डीकरणनिमित्तकश्राद्धे अमुकगोत्राय पितामहायामुकशर्मणे वसुस्वरूपायैतत्तेऽन्नं सोपस्करणं स्वधेति पितामहायान्नमुत्सृजेत् ।। ततः प्रपितामहान्नपात्रमालभ्य पूर्ववत् पृथिवी ते इत्यादि कृत्वा मोटकादीन्यादाय।। ॐ अद्यामुकगोत्रस्यामुकप्रेतस्य सपिण्डीकरणनिमित्तकश्राद्धे अमुकगोत्राय प्रपितामहायामुकशर्मणे रुद्रस्वरूपाय एतत्तेऽन्नं सोपस्करणं स्वधेति प्रपितामहायान्नमुत्सृजेत् ।। ततो वृद्धप्रपितामहान्नपात्रमालभ्य

पूर्ववत् पृथिवी ते इत्यादिकं सर्वं कृत्वा मोटकादीन्यादाय ।। ॐ अद्यामुकगोत्रस्यामुकप्रेतस्य सपिण्डीकरणनिमित्तकश्राद्धे अमुकगोत्राय वृद्धप्रपितामहायामुकशर्मणे आदित्यस्वरूपायैतत्तेऽन्नं सोपस्करणं स्वधेति वृद्धप्रपितामहायान्नमुत्सृजेत् ।। ततः सव्येन । मधुवाता इति ऋचं ।। ॐ मधु मधु मधु इति च जपित्वा ।। अन्नहीनमित्यादि च पठित्वा ।। नमस्तुभ्यं विरूपाक्षेति च श्लोकं पठेत् ।।८८।।

ततः अपसव्येन ।। पितामहान्नपात्रसन्निधौ आस्तृतदक्षिणाग्रकुशत्रयेण भूमिं प्रोक्ष्य मोटकं चादाय- असंस्कृतप्रमीतानां त्यागिनां कुलयोषिताम्।। उच्छिष्टभागधेयानां दर्भेषु विकिरासनम् - इति आसनं दद्यात् ।। सतिल-घृतमन्नमादाय जलेनाऽऽप्लाव्य मोटकं चादाय । अग्निदग्धाश्च ये जीवा येप्यदग्धाः कुले मम।। भूमौ दत्तेन तृप्यंतु तृप्तायान्तु परां गतिमित्या-

स्तृतकुशोपरि तदन्नं विकिरेत् ।। ततः सव्यंकृत्वाऽऽचम्य हरिं स्मृत्वा अपसव्यं कृत्वा ततः प्रेतपिण्डदानार्थमेकां पितामहादिकपिण्डदानार्थ-मपरां हस्तमितां चतुरङ्गुलोच्छ्रितां सैकतादिकां दक्षिणप्लवां पिण्डिकां निर्माय प्रेतपिण्डिकायां रेखाकरणोल्मुकभ्रमणं विनैव छिन्नमूलकुशा-नास्तीर्य्य अपरपिण्डिकामध्ये वामेन पाणिना दर्भपिंजुली गृहीत्वा दक्षिणहस्ते कृत्वा तन्मूलेन सव्योपगृहीतदक्षिणपाणिना ॐ अपहता असुरा रक्षाᳩसि वेदिषद इति मंत्रेण दक्षिणाग्रां प्रादेशप्रमाणां रेखां सकृदुल्लिखय दर्भपिञ्जुलिमुत्तरस्यां क्षिपेत् ।। ततो रेखोपरि ॐ ये रूपाणि प्रतिमुञ्चमाना असुराः सन्तः स्वधया चरन्ति।। परापुरो निपुरो ये भरन्त्यग्निष्ठाँल्लोकात्प्रणुदात्यस्मादिति मन्त्रेणाङ्गारं भ्रामयित्वा दक्षिणतः क्षिपेत् ।। ततो रेखायां छिन्नमूलकुशानास्तृणुयात् ।।८९।।

ततः सव्यंकृत्वाऽऽचम्याऽपसव्यं कृत्वा पुटकद्वये गंधपुष्पतिलजलानि कृत्त्वा एकं पुटकं वामहस्ते कृत्वा कुशादिकमादाय अद्यामुकगोत्रा-मुकप्रेत सपिण्डीकरणश्राद्धे पिण्डस्थाने इदमवनेजनं ते मया दीयते तवोपतिष्ठतामिति पूर्वपिण्डिकायां छिन्नमूलकुशोपरि अवनेजनं दद्यात्।। ततोऽपरपुटकं वामहस्ते कृत्वा मोटकादीन्यादाय ।। ॐ अद्यामुकगोत्रस्या-मुकप्रेतस्य सपिण्डीकरणनिमित्तकश्राद्धे पिण्डस्थाने अमुकगोत्रपितामहा-मुकशर्मन्वसुस्वरूपाऽत्रावनेनिक्ष्व ते स्वधेति द्वितीयपिण्डिकाया आस्तृत-कुशमूलसन्निधाने पितामहायावनेजनं दद्यात् ।। पुनर्मोटकादीन्यादाय।। ॐ अद्यामुकगोत्रस्यामुकप्रेतस्य सपिण्डीकरणनिमित्तकश्राद्धे पिण्डस्थाने अमुकगोत्र प्रपितामहामुकशर्मन् रुद्रस्वरूपात्रावनेनिक्ष्व ते स्वधेति आस्तृत-कुशमध्ये प्रपितामहायावनेजनं दद्यात् ।। पुनर्मोटकादीन्यादाय ॐ

अद्यामुकगोत्रस्यामुकप्रेतस्य सपिण्डीकरणनिमित्तकश्राद्धे पिण्डस्थाने अमुकगोत्र वृद्धप्रपितामहामुकशर्मन्नादित्यस्वरूपात्रावनेनिक्ष्व ते स्वधेति आस्तृतकुशाग्रे वृद्धप्रपितामहायाऽवनेजनं दद्यात् ।। ततः कपित्थप्रमाणान् चतुरः पिण्डान्निर्माय प्रथमपिण्डं कुशतिलसहितमादाय ।। ॐ अद्यामुक-गोत्रामुकप्रेत सपिण्डीकरणश्राद्धे एष पिण्डस्ते मया दीयते तवोपतिष्ठता-मिति पूर्वपिण्डिकायां कुशोपरि प्रेतपिण्डं दद्यात् ।। ततो पश्चिमपिण्डिकायां मोटकादीन्यादाय पिण्डं चादाय ।। ॐ अद्यामुकगोत्रस्यामुकप्रेतस्य सपिण्डीकरणनिमित्तकश्राद्धे अमुकगोत्र पितामहामुकशर्मन्वसुस्वरूपैष ते पिण्डः स्वधेति प्रथमावनेजनस्थाने पितामहाय पिण्डं दद्यात् ।। पुनर्मोटकादीन्यादाय पिण्डं चादाय।। ॐ अद्यामुकगोत्रस्यामुकप्रेतस्य सपिण्डीकरणनिमित्तकश्राद्धे अमुकगोत्र प्रपितामहामुकशर्मन् रुद्रस्वरूपैष

ते पिण्डः स्वधेति द्वितीयावनेजनस्थाने प्रपितामहाय पिण्डं दद्यात् ।। पुनर्मोटकादीन्यादाय पिण्डं चादाय ॐ अद्यामुकगोत्रस्यामुकप्रेतस्य सपिण्डीकरणनिमित्तकश्राद्धे अमुकगोत्र वृद्धप्रपितामहामुकशर्मन्ना-दित्यस्वरूपैष ते पिण्डः स्वधेति तृतीयावनेजनस्थाने वृद्धप्रपितामहाय पिण्डं दद्यात्।। ततः पितामहादिपिण्डास्तरणकुशमूलेन लेपभागभुज-स्तृप्यन्त्विति करं प्रोक्ष्य सव्यं कृत्वाऽऽचम्य हरिं स्मरेत् ।। ततोऽपसव्यं कृत्वा दक्षिणाभिमुखो मन्त्रपाठं विना प्रेतं भास्वरमूर्तिं चिन्तयेत् ।। ततः सव्येन पितामहादीनुद्दिश्य दक्षिणाभिमुखः ॐ अत्र पितरो मादयध्वं यथाभागमाबृषायध्वमिति पठित्वा उत्तराभिमुखो भूत्वा श्वाशं नियम्य भास्वरमूर्तिं पितामहादिकं ध्यायन् ।। अमी मदन्त पितरो यथाभागमा-बृषायिष त इति पठेत् ।। ततः प्रेतावनेजनपात्रं वामहस्ते कृत्वा कुशादी-

न्यादाय अद्यामुकगोत्रस्यामुकप्रेतस्य सपिण्डीकरणश्राद्धपिण्डे इदं प्रत्यवनेजनं ते मया दीयते तवोपतिष्ठतामिति प्रेताय प्रत्यवनेजनं दत्वा।। पितामहाद्यवनेजनपात्रं वामहस्ते कृत्वा मोटकादीन्यादाय ।। ॐ अद्यामुकगोत्रस्यामुकप्रेतस्य सपिण्डीकरणनिमित्तकश्राद्धपिण्डे अमुकगोत्र पितामहामुकशर्म्मन्वसुरूपेदं प्रत्यवनेजनं ते स्वधेति पितामहाय प्रत्यवनेजनं दत्वा ॥९०॥

ॐ अद्यामुकगोत्रस्यामुकप्रेतस्य सपिण्डीकरणनिमित्तिकश्राद्धपिण्डे अमुकगोत्र प्रपितामहामुकशर्मन् रुद्रस्वरूपेदं प्रत्यवनेजनं ते स्वधेति प्रपितामहाय प्रत्यवनेजनं दत्वा ।। ॐ अद्यामुकगोत्रस्यामुकप्रेतस्य सपिण्डीकरणनिमित्तकश्राद्धपिण्डे अमुकगोत्र वृद्धप्रपितामहामुकशर्म्मन्नादित्यस्वरूपेदं प्रत्यवनेजनं ते स्वधेति वृद्धप्रपितामहाय प्रत्यवनेजनं दद्यात्।। ततो नीवीं विस्त्रंस्य । सव्यंकृत्वाऽऽचम्य अपसव्यं कृत्वा वामेन पाणिना

धृतं सूत्रं दक्षिणेनादाय मन्त्रपाठं विना ।। प्रेतैतत्ते वास इत्युभाभ्यां हस्ताभ्यां पिण्डोपरि सूत्रं धारयेत् ।। सूत्रमादाय ।। ॐ नमो वः पितरो रसाय नमो वः पितरः शोषाय नमो वः पितरो जीवाय नमो वः पितरः स्वधायै नमो वः पितरोघोराय नमो वः पितरो मन्यवे नमो वः पितरः पितरो नमो वो गृहान्नः पितरो दत्तसतो वः पितरो द्वेष्मैतद्वः पितरो वास इति मन्त्रं पठित्वा प्रत्येकं पिण्डोपरिं सूत्रं धारयेत् ।। ततः प्रत्येकं पिण्डान् गंधादिभिः संपूज्य कुशादिकमादाय अद्यामुकगोत्रामुकप्रेत सपिण्डीकरणनिमित्तकश्राद्धपिण्डे एतानि गंध पुष्प धूप दीप-नैवेद्यानि ते मया दीयन्ते तवोपतिष्ठन्तामिति प्रेताय गन्धादिकमुत्सृजेत् ।। मोटकान्यादाय ।। ॐ अद्यामुकगोत्रस्यामुकप्रेतस्य सपिण्डीकरण-निमित्तकश्राद्धपिण्डे अमुकगोत्राः पितामह प्रपितामहवृद्धप्रपितामहा अमुका-

मुकशर्माणि वसुरुद्रादित्यस्वरूपा एतानि सूत्रगन्धपुष्पधूपदीपैक्षवादि नैवेद्यानि युष्मभ्यं स्वधेति पितामहादिभ्यो गन्धादिकमुत्सृजेत्। ततः पिण्डसमीपे तत् तत् पिण्डशेषान्नं विकिरेत्।।१०।।

ततः सव्येन ।। शिवा आपः सन्तु इति जलम् ।। सौमनस्यमस्तु इति पुष्पम् ।। अक्षतं चारिष्टमस्तु- इति तण्डुलान् विश्वेदेवान्नपात्रोपरि क्षिपेत् ।। ततोऽपसव्यं कृत्वा । शिवा आपः सन्तु इति जलम् ।। सौमनस्यमस्तु इति पुष्पम् ।। अक्षतं चारिष्टमस्तु इति तण्डुलान् प्रेतान्नपात्रोपरि क्षिपेत् । कुशादिकमादाय अद्यामुकगोत्रस्यामुकप्रेतस्य सपिण्डीकरणश्राद्धे दत्तैतदन्नपानादिकमुपतिष्ठतामित्यक्षय्योदकं दत्वा सव्यं कृत्वा अघोरः प्रेतोस्तु इति दक्षिणां दिशं पश्यन्पिण्डोपरि पूर्वाग्रां जलधारां दद्यात् ।। ततः सपवित्रान् कुशान्पिण्डोपरि धृत्वा मन्त्रपाठं विना पुटकादिस्थजलादिना इदमूर्ज्जं ते मया दीयते तवोपतिष्ठता-

मिति सपवित्रकुशोपरि दक्षिणाग्रां पयोधारां दद्यात् ।। दक्षिणादानं विसर्जनं चान्ते सहैव भवति ।।९२।।

सूवर्णरूप्यदर्भैस्तु तस्मिन्पिण्डे ततस्त्रिधा । कृत्वा पितामहादिभ्यः पितृभ्यश्च समर्प्ययेत् इति ब्रह्मपुराणवचनात् ।। सुवर्णरूप्यदर्भैः पिण्ड-विभागः कर्तव्यः।। ततः पिण्डे सूत्रादिकमपनीय ।। अद्यामुकोत्रस्यामुक-प्रेतस्य पिण्डं पितामहादिपिण्डैः सह संयोजयिष्ये' भनेर सुन वा चादीको टुक्रो र कुश दुई हातमा लिएर यो तलको मन्त्र पढी प्रेतपिण्डलाई तीन भागमा बाँड्नु, विभाजन गर्नु र मन्त्र पढ्दै जानु । ये समानाः इति। त्यसपछि पहिलो पिण्डको भाग लिएर-ये समानाः संसृजंतु त्वा पृथिवी० सन्सृजध्वं० सङ्गच्छध्वं० समानो मन्त्रः ।। समानीव०।। मधुव्वाता इत्यादि मन्त्रहरू पढेर संङ्कल्प लिनु - अमुकगोत्रामुकप्रेतामुकगोत्रेण

स्वपित्राऽमुकशर्मणावसुस्वरूपेण संसृजस्व भनेर' पितामहको पिण्डमा दहि, मह वा चिनी मिसाई वाटुलो पिण्ड बनाउनु । यस्तै प्रकारले द्वितीय पिण्ड लिएर माथिका सबै मन्त्रहरू पढेर सङ्कल्प भन्नु- अमुकगोत्रा- मुकप्रेत अमुकगोत्रेण स्वपितामहेनाऽमुकशर्मणा रुद्रस्वरूपेण संसृजस्व भनेर प्रपितामहपिण्डमा जोडेर दहि, मह आदि मिसाई बाटुलो (गोलो) पिण्ड बनाउनु। यस्तै प्राकारले तृतीयपिण्डिभाग लिएर पूर्वोक्त सवैमन्त्रहरू पढेर-अमुकगोत्रामुकप्रेतामुकगोत्रेण स्वप्रपितामहेना- मुकशर्मणा आदित्यस्वरूपेण संसृजस्व, भनेर अनि वृद्धप्रपितामहको पिण्डमा जोडेर दहि, मह आदि मिसाएर बाटुलो (गोलो) बनाउनु । अनि पिण्डमेलन गरेपछि यो मन्त्र पढ्नु - एष वोऽनुगतः प्रेतः पितृभाग- मवाप्तवान् । शुभं भवतु शेषाणां जायतां चिरजीविनः। त्यसपछि

पितृपूर्वक पितामहादिलाई संझेर गन्ध, पुष्प, धूप, दीप, नैवेद्यादि तीन ओटै पिण्डमा चढाउनु र मोटकादि लिएर यो संकल्प भन्नु- ॐअद्यामुक-गोत्रस्यास्मत्पितुरमुकशर्मणः सपिण्डीकरणश्राद्धपिण्डे अमुकगोत्राः पितामहप्रपितामहवृद्धप्रपितामहाः अमुकामुकामुक-शर्म्मणो वसुरुद्रादित्यस्व-रूपा एतानि गन्धपुष्पधूपदीपनैवेद्यानि युष्मभ्यं स्वधा, भनेर चन्दन, फूल, दीप, नैवेद्यआदि त्यहीं छाडिदिनु । (केचित्तु प्रेतपिण्डावयवत्रयेण संयोजिताँस्त्रीन् पिण्डानिदानींतन मृतमारभ्य पुरुषत्रयाय पार्वणवत् पुनरपि नामगोत्राद्युच्चार्य दद्यादित्याहुः)।।ततः पितामहाद्यन्नपात्रेषु क्रमेण प्रत्येकं।। ॐ शिवा आपः सन्तु इति जलम् ।। ॐ सौमनस्यमस्तु इति पुष्पम् ।। ॐ अक्षतं चारिष्टमस्तु इति तण्डुलान् दत्वा । ततः सव्यंकृत्वा कर्म्मपात्रोदकं कुशैः प्रतिमन्त्रं स्वशिरस्यभिषिञ्चेत् । ॐ अस्मत्कुले

दीर्घमायुरस्तु ।। ॐ शान्तिरस्तु ।। ॐ पुष्टिरस्तु ॐ वृद्धिरस्तु ।। ॐ यद्यच्छ्रेयस्तदस्तु ।। ॐ यत्पापं तत् प्रतिहतमस्तु इति भूमौ । ॐ द्विपदेचतुष्पदेभ्यः शान्तिरस्तु ।। ततोऽपसव्यं कृत्वा मोटकादीन्यादाय।। ॐ अद्यामुकगोत्रस्यास्मत्पितुरमुकशर्म्मणः सपिण्डीकरणनिमित्तकश्राद्धे अमुकगोत्रस्याऽस्मत्पितामहस्यामुकशर्मणो वसुस्वरूपस्य दत्तैतदन्नपानादिकमक्षय्यमस्त्विति पितामहायाक्षय्योदकं दत्वा।। ॐ अद्यामुकगोत्रस्यास्मत्पितुरमुकशर्मणः सपिण्डीकरणनिमित्तकश्राद्धे अमुकगोत्रस्यास्यत्रपितामहस्यामुकशर्म्मणो वसुस्वरूपस्य दत्तैतदन्नपानादिकमक्षय्यमस्त्विति पितामहायाक्षय्योदकं दत्त्वा- ॐ अद्यामुकगोत्रस्यास्मतपितुरमुकशर्मणः सपिण्डीकरणश्राद्धे अमुकगोत्रस्यास्मत्प्रपितामहस्यामुक शर्मणो रुद्रस्वरूपस्य दत्तैतदन्नपानादिकमक्षय्यमस्त्विति, भनेर प्रपितामहलाई अक्षय्योदक

दिएर सङ्कल्प भन्नु- ॐ अद्यामुकगोत्रस्यास्मत्पितुरमुकशर्म्मणः सपिण्डीकरणनिमित्तकश्राद्धे अमुकगोत्रस्य वृद्धप्रपितामहस्यामुकशर्म्मणो आदित्यस्वरूपस्य दत्तैतदन्नपानादिकमक्षय्यमस्तु, भनेर वृद्धप्रपितामहलाई अक्षय्योदक दिएर सव्य हुनु, अनि हात जोरेर दक्षिण दिशा तिर हेर्दै- ॐ अघोराः पितरः सन्तु, भनेर पितामहादि तीन पिण्ड माथि पूर्वाग्र पारी जलधारा दिनु । त्यसपछि सव्यले नै पूर्वाभिमुख भई आशिष प्रार्थना गर्नु - ॐ गोत्रं नो वर्द्धताम् ।। ॐ वर्द्धतामिति प्रतिवचनम् ।। ॐ दातारो नोऽभिवर्द्धन्ताम् ।। ॐ वर्द्धन्ताम् ।। ॐ वेदाः सन्ततिरेव च।। ॐ सन्तु ।। ॐ श्रद्धा च नो माव्यगमत् ।। ॐ मागात् ॐ बहुदेयं च नोऽस्तु ।। ॐ अस्तु ।। ॐ अन्नं च नो बहु भवेत् ।। ॐ भवतु ।। ॐ अतिथींश्च लभेमहि ।। ॐ लभध्वम् ।। ॐ याचितारश्च

नः सन्तु ।। ॐ सन्तु ।। ॐ मा याचिष्म कञ्चन ।। ॐ मा याचेथाः। ॐ एताः आशिषः सत्या सन्तु ॐ सन्तु, भनेर श्राद्धकर्ताले ब्राह्मणका हातबाट तिलक लगाउनु । त्यसपछि अपसव्य भएर पिण्डमाथि पवित्रसहितको कुश र जल हातमा लिई चढाउनु । अनि निम्नमन्त्र पढी- ॐ ऊर्ज्ज वहन्तीरमृतं घृतं पयः कीलालं परिश्रुतम् ।। स्व धास्थ तर्प्पयत मे पितृन्, भनेर पवित्रसहितजलले पिण्डमाथि दक्षिणतिर धारा बनाई अर्पण गर्नु । त्यसपछि सव्य भएर पिण्ड सुघ्नु र अपसव्य भई पिण्ड उठाउनु । त्यहाँका कुशहरू आगोमा राख्नु।। शङ्ख चक्रं च सँलिख्य ।। ॐ शङ्खाय नमः।। ॐ चक्राय नमः, भनेर चन्दन, फूलादिले शंख चक्र पूजा गरेर अपसव्य भएर न बोली पिण्डहरूलाई वेदीमाथि लिएर पूजन गर्नु । यो मन्त्रले सव्यले॰- ॐ वसन्ताय

नमस्तुभ्यं ग्रीष्माय च नमो नमः ।। वर्षाभ्यश्च शरत्संज्ञ ऋतवे च नमो नमः ।। हेमन्ताय नमस्तुभ्यं नमस्ते शिशिराय च ।। माससम्वत्सरेभ्यश्च दिवसेभ्यो नमो नमः इति।। त्यसपछि सव्यले विश्वेदेवार्घपात्र चलाउनु, अपसव्यले पितामहाद्यर्घपात्र उत्तानो गराउनु । सव्यले दक्षिणा दिनको लागि कुश, जौ, जल, दक्षिणा द्रव्य लिएर संकल्प गर्नु- ॐ अद्यामुकगोत्रस्य पितुरमुकशर्म्मणः सपिण्डीकरणनिमित्तकामुकगोत्र-पितामहप्रपितामहवृद्धप्रपितामहामुकामुकशर्म्मवसुरुद्रादित्यस्वरूपश्राद्ध-सम्बन्धिनां कालकामविश्वेषां देवानां कृतैतच्छ्राद्धप्रतिष्ठार्थं हिरण्यमग्निदैवतं यथानामगोत्राय ब्राह्मणाय दक्षिणां दातुमहमुत्सृजे, भनेर विश्वेदेव श्राद्धको दक्षिणा दिनु । (सर्वकर्मापसव्येन दक्षिणादानवर्जितमिति जमदग्निवचनात् पित्रादि दक्षिणावाक्यम्) फेरि सव्यले नै कुश, तिल, जल, दक्षिणाद्रव्य

लिएर संकल्प गर्नु- ॐ अद्यामुकगोत्रस्य पितुरमुकशर्मणः कृतैतत् सपिण्डीकरणश्राद्धप्रतिष्ठार्थमिदं रजतं चंद्रदैवतं यथानामगोत्राय ब्राह्मणाय दक्षिणां दातुमहमुत्सृजे, भनेर पितृश्राद्धको दक्षिणादिनु फेरि कुश-तिल-दक्षिणाद्रव्य लिएर सङ्कल्प गर्नु- ॐ अद्यामुकगोत्रस्य पितुरमुकशर्मणः सपिण्डीकरणनिमित्तकश्राद्धे कृतैतदमुकगोत्रपितामहप्रपितामहवृद्धप्रपितामहवसुरुद्रादित्यस्वरूपामुकामुकामुकशर्म्माणः श्राद्धप्रतिष्ठार्थमिदं रजतं चन्द्रदैवतं नाना नामगोत्रेभ्यो ब्राह्मणेभ्यो दक्षिणां दातुमहमुत्सृजे, भनेर पितामहादिश्राद्धको दक्षिणा दिनु त्यसपछि सव्यले नै 'कालकामविश्वेदेवाः प्रीयन्तामिति' भनेर विश्वेदेवविसर्जन गरेर अपसव्यले स्वस्ति भनेर पितृविसर्जन गर्नु। अनि- व्वाजे व्वाजे वत व्वाजिनो नो धनेषु विप्प्राऽअमृता ऋतज्ञाः ।। अस्य मध्वः पिबत मादयध्वं तृप्ता यात

पथिभिर्द्देवयानैः, भनेन पितामहादीहरूलाई विसर्जन गर्नु, त्यसपछि सव्यले ॐ देवताभ्य० इत्यादिमन्त्र तीन पटक भनेर बत्ती ढाकिदिनु, सव्यभई हात, पाउ, धोएर आचमन गर्नु र विष्णु स्मरण गर्नु, त्यसपछि यो मन्त्र पढ्नु - ॐ प्रमादात्कुर्वतां कर्म प्रच्यवेताध्वरेषु च ।। स्मरणादेव तद्विष्णोः सम्पूर्णं स्यादितिश्रुतिः।। अनि विष्णुलाई पनि स्मरण गर्दै श्राद्धका उपर्युक्त वस्तुहरू ब्राह्मणलाई दिनु । सहगमने तु पित्रैकोदिष्ट-वन्मात्रेकोद्दिष्टं सहैव विधाय पित्रर्घपात्रपितामहार्घपात्रे मेलयित्वा ।। ॐ अद्यामुकगोत्राया-मातुरमुकप्रेताया-अर्घपात्रोदकं-अमुकगोत्रस्यस्वभर्तु-रर्घपात्रोदकेन संयोजयिष्ये, भनेर उक्त पात्र लिएर पहिले कहिएका मन्त्रहरू पढेर पित्र्यर्घ पात्रमा रहेको तृतीयभागको जल, चन्दनयुक्त पितामहको पात्रमा रहेको जल मिलाई संकल्प गर्नु- अमुक गोत्रे

मातरमुकप्रेते अमुकगोत्रेण स्वभर्त्रासह सायुज्यं गच्छेति, भन्नु यस्तै प्रकारले पितृपिण्ड पनि जोडे पछि यो संङ्कल्प गर्नु- ॐ अद्यामुकगोत्राया मातुरमुकप्रेतायाः पिण्डं स्वभर्तृपिण्डेन संयोजयिष्ये भनेर मातृपिण्ड लिएर माथि कहिएको मन्त्र पढी संकल्प गर्नु - ॐ अमुकगोत्रे मातुरमुकप्रेते अमुकगोत्रेण स्वभर्त्रामुकशर्मणा संसृजस्वेति ।। पितृपिण्ड-प्रथमभागयुक्ते पितामहपिण्डे संयोज्य दधिमधुभ्यां मिश्रीकृत्य वर्तुलं कुर्यात्।। मातृश्राद्धमा दक्षिणावाक्य अलग गर्नु । त्यही नै सव्य भएर कुश-तिल-दक्षिणाद्रव्यलिएर संकल्प गर्नु- ॐ अद्यामुकगोत्रायाः अस्मत्मातुरमुकदेब्याः कृतैतत् सपिण्डीकरणश्राद्धप्रतिष्ठार्थमिदं रजतं चन्द्रदैवतं यथानामगोत्राय ब्राह्मणाय दक्षिणां दातुमहमुत्सृजे ।। इति विशेषः।। सहगमनाभावे मातृसपिण्डीकरणे पितामह्यादि पिण्डत्रये

मातृपिण्डं संयोजयेत् ।। मृतमातृको मात्रादि पिण्डत्रये पत्न्या पिण्डं संयोजयेत्।। अमृतमातृकस्तु पितामह्यादि पिण्डत्रये पत्न्याः पिण्डं संयोजयेदिति सपिण्डीकरणम् ।।

## अथ सपिण्डोत्तरपाथेयश्राद्धम्

सपिण्डीकरण गरिसके पछि वा बाह्रौं दिनमा फेरि पाथेयश्राद्ध गर्नु । सो विधि पार्वण वा एकोद्दिष्टको विधिले सिद्धान्न वा आमान्नले गर्नु। कर्ताले स्नान गरी पहिले जस्तै बत्ती स्थापन गरी बाल्नु, सर्स्यूँ वा तिलहरू श्राद्धस्थल वरि-परि छर्कनु । त्यसपछि पूर्वाभिमुख भई तल लेखिएका उपचार विधिले कर्मपात्र गराउनु- ॐ यद्देवा देवहेडनमित्यादि तीन मन्त्रले कर्मपात्र बनाउनु । ॐ पवित्रेस्थो यो मन्त्रले पवित्रम् ।। ॐ शन्नोदेवीले जल ।। ॐ तिलोऽसीले तिल ।।

ॐ श्रीश्चते मन्त्रले फूलहरू ।। ॐ यवोसीति मन्त्रले जौहरू कर्मपात्रमा राख्नु कर्मपात्रमा रहेको कुशको जलले । ॐ अपवित्रः पवित्रोवेत्यादि पढेर पुण्डरीकाक्षः पुनातु भनेर आफू र श्राद्धस्थल वरिपरि सेचन गर्नु। त्यसपछि कुशादि लिएर सङ्कल्प भन्नु - ॐ अद्येहेत्यादि (देशकालादि संझी) अद्यामुकगोत्रस्यास्मत्पितुरमुकशर्मणः प्रेतलोकात् पितृलोकगमने सुखसिद्ध्यर्थं पाथेयश्राद्धं सांवत्सरिकैकोद्दिष्टश्राद्धविधिना-ऽहं करिष्ये भनेर संकल्प गर्नु। यहांको वाक्यमा पाथेयपदप्रक्षेप भन्ने शब्द जोड़नु त्यसपछि 'देवताभ्यः' इत्यादि मंत्र तीन पटक पढ्नु। त्यस-पछि अपसव्य भएर दक्षिणाभिमुख हुनु र बायाँ घुँडोले भूमिमा छोई मोटकादि लिएर संकल्प भन्नु - ॐ अद्यामुकगोत्रस्यास्मत्पितुरमुकशर्मणः पाथेयश्राद्धे इदमासनं ते स्वधा ।। भनेर छोडिदिनु, त्यसपछि एउटा

दुनोमा निम्न मंत्रहरूले त्यही त्यही सामग्री राख्नु पवित्र-- ॐ पवित्रेस्थो०' ॐ शन्नो देवी भन्ने मन्त्रले जल ॐ तिलोसी यो मन्त्रले तिल ।। ॐ गन्धद्वारां भन्ने मन्त्रले चन्दन ॐ श्रीश्चते यो मन्त्रले फूलहरू राख्नु त्यसपछि त्यो अर्घपात्र बायाँ हातमा राखि फूलसहितको कुश ॐ नमोनारायणाय, भनेर राखिदिनु सो जललाई ॐ या दिव्या आपः इत्यादि मन्त्रले मन्त्रित् गरी मोटक लिएर सङ्कल्प भन्नु- अद्यामुक गोत्रामुकशर्मन् पाथेयश्राद्धे एष हस्तार्घस्ते स्वधा भनेर छोडिदिनु। त्यसपछि पवित्रसहितको अर्घपात्र आफू बसेको बायाँ भाग वा कुशका ब्राह्मणको पछिल्तिर लगी ॐ पित्रे स्थानमसी, भनेर दुनो घोप्ट्याइदिनु । त्यो दुनोमाथि तीन ओटा कुशको टुक्रा राखिदिनु । त्यसपछि चन्दन, फूल, अक्षतादिले ब्राह्मणको पूजा गरी मोटक आदि लिएर संकल्प

गर्नु- ॐ अद्यामुकगोत्रास्मत्पितरमुकशर्मन् पाथेयश्राद्धे एतानि गन्ध-पुष्पाक्षतधूपदीपपूगीफलद्रव्यवासांसि ते स्वधा भनेर छाडिदिनु । तत आसनसहितस्यान्नपात्रस्य चतुर्दिक्षु चतुरस्त्रं मण्डलं विधाय श्राद्धीयान्नाग्र-भागतिलघृतमधुजलयुतमादाय मोटकादीन्यादाय इदमामान्नं सजलमेतद् भूस्वामिपितृभ्यो नमः इत्युत्सृजेत् ।। ततो व्यंजनसहिततिलघृतमधुजल-युतमन्नमुपनीय मधुनाऽभिघार्य अधोमुखाभ्यां व्यस्ताभ्यां पाणिभ्यामन्नपात्र-मालभ्य पृथ्वी ते इत्यादि देखि जुहोमी सम्म र इदं विष्णुरित्यादि देखि सुरेस्वाहा सम्मका मन्त्रहरू पढेर ।। ॐ अपहता असुरेत्यादि मन्त्रले तिलहरू वरिपरि छर्नु त्यसपछि ॐ इदमन्नम् ।। ॐ इमा आपः।। ॐ इदमाज्यम् ।। ॐ इदं हविरिति पुनरन्ने। क्रमैले अन्न, जल, घिउ, आदि ब्राह्मणलाई देखाएको भावनागरी बायां हातका औंलाहरूले

क्रमशः ती-ती वस्तुहरू छोएर र दायाँ हातले मोटक लिएर ती वस्तुहरू छुनु, सङ्कल्प यस प्रकार छ- ॐ अद्यामुकगोत्रायास्मत्पित्रेऽ-मुकशर्मणे इदमन्नं सजलं सोपस्करणं ते स्वधा, भनेर छाडिदिनु । त्यसपछि सव्य भएर निम्न मन्त्रहरू पढ्नु - मधु व्वातेत्यादि ऋचं पठेत् ।। ॐ मधु मधु मधु इति अन्नहीनं इत्यादि मन्त्रहरू पढिसकेपछि अन्न पात्र नगिचै दक्षिण तर्फ भूइमा कुश राखी विकिरासन दिनु र मोटक लिएर यो श्लोक भन्नु- असंस्कृतप्रमीतानां त्यागिनां कुलयो-षिताम् ।। उच्छिष्टभागधेयानां दर्भेषु विकिरासनम् ।। ततः सतिल-घृतमधुजलयुतमन्नमादाय जलेनाऽऽप्लाव्य मोटकादीन्यादाय ।। अग्नि-दग्धाश्च ये जीवा येप्यदग्धा कुले मम ।। भूमौ दत्तेन तृप्यन्तु तृप्ता यान्तु परां गतिम् इत्युत्सृजेत् ।। कुशान्परित्यज्य सव्येन हस्तौ पादौ

प्राक्षाल्याऽऽचम्य विष्णुं स्मरेत् ।। मधुवातेति ऋचं पठेत् गायत्रीं स्मरेत् ।। ततोऽऽपसव्येन अन्नपात्रसमीपे पिण्डदानार्थं मृत्पिण्डिकां विधाय तदुपरि दर्भपिञ्जुलीं गृहीत्वा ॐ अपहता असुरा रक्षा इत्यादि मन्त्रले दक्षिणतर्फबाट रेखा खिच्नु । उत्तरतिर फ्यांक्नु । त्यसपछि रेखामाथि निम्न मन्त्र 'ये रूपानि प्रतिमुञ्च०' पढी अंगार घुमाउनु र सो अंगार दक्षिणतिर फ्यांकिदिनु । अनि वेदिकामा मूल नकाटिएको (जरो सहितको) कुश बिछ्याई सव्यभएर ॐ देवताभ्यः० इत्यादि मन्त्र बढ्नु । अपसव्य भएर मोटक लिनु र सङ्कल्प भन्नु- ॐ अद्यामुकगोत्रास्मत्पितरमुकशर्मन् पाथेयश्राद्धे पिण्डस्थाने इदमवनेजनं ते स्वधा, भनेर कुशमाथि आसन दिनु । त्यसपछि तिल, घिउ, महयुक्त भएको पिण्ड बनाएर पछि पिण्ड सहित जल, तिल, मोटक लिएर

